आनन्दाश्रमसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः २३

# वैयासिकन्यायमाला ।

अर्थात्

वेदान्ताधिकरणन्यायमाला

परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थमुनिप्रणीता
तत्तदधिकरणप्रदर्शकमहर्षिवेदव्यासप्रणीत-
ब्रह्मसूत्रैर्विभूषिता ।

जयपुरमहाराजाश्रितेन संस्कृतपाठशालाध्यापकेन
दाधीचपण्डितशिवदत्तेन संशोधिता ।

सा च

**महादेव चिमणाजी आपटे**

इत्यनेन

पुण्याख्यपत्तने

**आनन्दाश्रममुद्रणालये**

आयसाक्षरैर्मुद्रयित्वा

प्रकाशिता ।

शालिवाहनशकाब्दाः १८१३

खिस्ताब्दाः १८९१



मूल्यं पादोनरूपकद्वयम् ।

# वैयासिकन्यायमालायामधिकरणानुक्रमणिका।


अधि०

प्रथमाध्यायप्रथमपादे—

१ ब्रह्मणो विचार्यत्वम्।

२ ब्रह्मणो लक्षणम्।

३ ब्रह्मणो वेदकर्तृत्वम्।

,, ब्रह्मणो वेदैकमेयत्वम्।

४ वेदान्तानां ब्रह्मैकपरत्वम्।

,, वेदान्तानां ब्रह्मण्यवसानम्।

५ ब्रह्मण एव सच्छब्दवाच्यत्वम्।

६ ब्रह्मण आनन्दमयत्वम्।

७ परमेश्वरस्यैव हिरण्मयपदवाच्यत्वम्।

८ ब्रह्मण एवाऽऽकाशशब्दवाच्यत्वम्।

९ ब्रह्मण एव प्राणशब्दवाच्यत्वम्।

१० ब्रह्मण एव ज्योतिःशब्दाभिधेयत्वम्।

११ ब्रह्मण एव प्राणशब्दव्युत्पाद्यत्वम्।

प्रथमाध्यायद्वितीयपादे—

१ ब्रह्मण एव मनोमयत्वम्।

२ ईश्वरस्यैवात्तृत्वम्।

३ जीवब्रह्मणोरेव गुहाप्रविष्टत्वम्।

४ ब्रह्मण एवाक्षिगतत्वम्।

५ परमेश्वरस्यैवान्तर्यामित्वम्।

६ परमेश्वरस्यैव भूतयोनित्वम्।

७ परमेश्वरस्यैव वैश्वानरत्वम्।

प्रथमाध्यायतृतीयपादे—

१ ब्रह्मण एव द्युभ्वाद्यायतनत्वम्।

२ परमात्मन एव भूमत्वम्।

३ ब्रह्मण एवाक्षरत्वम्।

४ परब्रह्मण ईक्षतिकर्मत्वम्।

५ ब्रह्मण एव दहराकाशत्वम्।

६ ईश्वरस्यैवाक्षिपुरुषत्वम्।

अधि०

७ चैतन्यस्य सर्वजगद्भासकत्वम्।

८ परमेश्वरस्याङ्गुष्ठमात्रत्वम्।

९ देवादीनामप्यधिकारित्वम्।

१० शूद्रस्य ब्रह्मविद्यायामनधिकारित्वम्।

११ ईश्वरस्यैव कम्पनहेतुत्वम्।

१२ ब्रह्मण एव ज्योतिष्ट्वम्।

१३ ब्रह्मण एव नामरूपनिर्वाहकत्वम्।

१४ ब्रह्मण एव विज्ञानमयत्वम्।

प्रथमाध्यायचतुर्थपादे—

१ कारणशरीरस्यैवाव्यक्तशब्दवाच्यत्वम्।

२ तेजोबन्नात्मकप्रकृतेरेवाजात्वम्।

३ प्राणादीनामेव पञ्चजनत्वम्।

४ जगद्योनौ ब्रह्मण्येव वेदान्तवाक्यसमन्वयः।

५ परमात्मन एव जगत्कर्तृत्वम्।

६ परमात्मन एव दर्शनयोग्यात्मत्वम्।

७ ब्रह्मण एवोपादाननिमित्तकारणत्वम्।

८ ब्रह्मण एव जगत्कारणत्वम्।

---

द्वितीयाध्यायस्य प्रथमपादे—

१ सांख्यस्मृतेर्बाध्यत्वम्।

२ योगस्मृतेर्बाध्यत्वम्।

३ वैलक्षण्याभासस्य जगत्कारणत्वाबाधकत्वम्।

४ काणादादिमतैर्बाध्यत्वाभावः।

५ द्वैतस्य भोक्तृभोग्याकारभासमानत्वम्।

६ ब्रह्मण्यद्वैतस्यैव तात्त्विकत्वम्।

अधि०
७ परमेश्वरस्य हिताहितभागित्वाभावः ।
८ अद्वितीयब्रह्मण एव नानाविधसृष्टिकर्तृत्वम् ।
९ ब्रह्मणः परिणामित्वम् ।
१० ब्रह्मणोऽशरीरस्यैव मायासद्भावः ।
११ तृप्तस्यापि ब्रह्मण एव जगत्स्रष्टृत्वम् ।
१२ ब्रह्मणो वैषम्यनैर्घृण्याभावः ।
१३ निर्गुणस्यापि ब्रह्मणः प्रकृतित्वम् ।

द्वितीयाध्यायद्वितीयपादे—
१ प्रधानस्य जगद्धेतुत्वाभावः ।
२ ब्रह्मणो विसदृशजगदुत्पत्तौ काणादीयदृष्टान्तसद्भावः ।
३ परमाणुकारणवादनिराकरणम् ।
४ वैनाशिकखण्डने समुदायासिद्धिः ।
५ विज्ञानवादनिराकरणम् ।
६ आर्हतानां सप्तभङ्गीनिराकरणम् ।
७ तटस्थेश्वरवादनिराकरणम् ।
८ जीवोत्पत्तिवादनिराकरणम् ।

द्वितीयाध्यायतृतीयपादे—
१ आकाशस्य ब्रह्मजन्यत्वम् ।
२ वायोर्ब्रह्मजन्यत्वम् ।
३ सद्ब्रह्मणोऽजन्यत्वम् ।
४ तेजसो ब्रह्मजन्यत्वम् ।
५ अपां ब्रह्मजन्यत्वम् ।
६ पृथिवीमात्रस्यान्नशब्दवाच्यत्वम्
७ सोपाधिकब्रह्मण एव कार्यकारणत्वम् ।
८ लयक्रमनिरूपणम् ।
९ प्राणादिसृष्टौ क्रमनिरूपणम् ।
१० जीवस्य जन्ममरणराहित्यम् ।
११ जीवस्य नित्यत्वम् ।
१२ जीवस्य चिद्रूपत्वम् ।
१३ जीवस्य सर्वगतत्वम् ।

अधि०
१४ जीवस्य कर्तृत्वम् ।
१५ जीवस्याध्यस्तकर्तृत्वम् ।
१६ ईश्वरस्य जीवप्रवर्तकत्वम् ।
१७ जीवेश्वरव्यवस्था ।

द्वितीयाध्यायचतुर्थपादे—
१ इन्द्रियाणां परमात्मजन्यत्वम् ।
२ इन्द्रियाणामेकादशत्वम् ।
३ इन्द्रियाणामणुत्वम् ।
४ प्राणस्य जन्यत्वम् ।
५ प्राणस्य तत्त्वान्तरत्वम् ।
६ प्राणस्याणुत्वम् ।
७ इन्द्रियाणां देवपरतन्त्रत्वम् ।
८ इन्द्रियाणां प्राणात्तत्त्वान्तरत्वम्
९ ईश्वरस्यैव नामरूपव्याकर्तृत्वम् ।

---

तृतीयाध्यायस्य प्रथमपादे—
१ जीवस्य भूतसूक्ष्मवेष्टितस्यैव परलोकगमनागमने ।
२ स्वर्गादवरोहतो जीवस्य सानुशयत्वम् ।
३ पापिनां स्वर्गे गत्यभावः ।
४ स्वर्गादवरोहे जीवस्याऽऽकाशादितुल्यत्वम् ।
५ स्वर्गादवरोहतां त्वराविलम्बौ ।
६ स्वर्गादवरोहतां व्रीह्यादौ संश्लेषः ।

तृतीयाध्यायद्वितीयपादे—
१ स्वप्नसृष्टेर्मिथ्यात्वम् ।
२ सुषुप्तौ जीवस्य हृत्स्थब्रह्मणैक्यम् ।
३ सुप्तस्यैव जागरणम् ।
४ मूर्छाया अवस्थान्तरत्वम् ।
५ ब्रह्मणो नीलरूपत्वम् ।
६ ब्रह्मणो निराकरणाविषयत्वम् ।
७ ब्रह्मातिरिक्तवस्तुनिराकरणम् ।
८ कर्माराधितेश्वरस्यैव फलदातृत्वम्

तृतीयाध्यायतृतीयपादे—

अधि०
१ सर्ववेदान्तप्रत्ययोपासनाया एकत्वम् ।
२ शाखान्तरोक्तस्याप्युपसंहारः ।
३ उद्गीथविद्याया भिन्नत्वम् ।
४ उद्गीथस्योंकारविशेषणत्वम् ।
५ वसिष्ठत्वादीनामाहार्यत्वम् ।
६ आनन्दादीनामुपसंहारः ।
७ पुरुषस्यैव ज्ञेयत्वम् ।
८ ईश्वरस्यैवाऽऽत्मशब्दवाच्यत्वम् ।
९ प्राणविद्यायामनग्नताबुद्धेरेव विधेयत्वम् ।
१० शाण्डिल्यविद्यायाः समानत्वम् ।
११ नाम्नोर्व्यवस्था ।
१२ संभृत्यादीनामनुपसंहारः ।
१३ पुरुषविद्याया विभिन्नत्वम् ।
१४ वेधादिमन्त्राणां विद्याङ्गत्वनिराकरणम् ।
१५ ज्ञानिनः कर्मणां हान्युपायने ।
,, विधूननशब्दस्य परित्यागार्थकत्वम् ।
१६ उपासकानां कर्मत्यागव्यवस्था ।
१७ उपासनया ब्रह्मलोकगन्तॄणामेव मार्गव्यवस्था ।
१८ सर्वास्वेवोपासनासु मार्गकल्पना ।
१९ तत्त्वज्ञानिनां मुक्तनैयत्यम् ।
२० निषेधोपसंहारः ।
२१ 'पिबन्तौ' 'द्वा सुपर्णा' इतिमन्त्रद्वयस्य विद्यैक्यम् ।
२२ उषस्तकहोलयोर्विद्यैक्यम् ।
२३ देहादित्यमण्डलवर्त्युपासनाया विद्याभेदः ।
२४ सत्यविद्या ।
२५ दहरहार्दाकाशयोरुपसंहारः ।
२६ उपवासे प्राणाहुतिलोपः ।
२७ अङ्गावबद्धोपास्त्यनैयत्यम् ।
२८ वायुप्राणोपासनयोः प्रयोगभेदः ।
२९ मनश्चिदादीनां स्वतन्त्रत्वम् ।
३० आत्मनो देहातिरिक्तत्वम् ।
३१ उक्थादिधियोः शाखान्तरेऽनुवृत्तिः ।
३२ वैश्वानरविद्यायां समस्तोपासनम् ।
३३ शाण्डिल्यादिविद्यानां भिन्नत्वम् ।
३४ अहंग्रहविद्यायां विकल्पनियमः ।
३५ लौकिकप्रतीकेषु याथाकाम्यम् ।
३६ कर्माङ्गप्रतीकेषु याथाकाम्यम् ।

तृतीयाध्यायचतुर्थपादे—

१ आत्मज्ञानस्य स्वतन्त्रत्वम् ।
२ कर्मत्यागिन एव ब्रह्मनिष्ठत्वम् ।
,, संन्यासिन एव ब्रह्मनिष्ठत्वम् ।
३ रसतमत्वादीनां ध्येयत्वम् ।
४ आख्यानस्य विद्यास्तुत्यर्थत्वम् ।
५ आत्मज्ञानस्य कर्मानपेक्षत्वम् ।
६ ज्ञानोत्पत्तौ यज्ञशमदमाद्यपेक्षत्वम् ।
७ आपदि सर्वान्नभोजनानुज्ञा ।
८ यज्ञादीनामाश्रमविद्योभयहेतुत्वम्
९ अनाश्रमिणोऽपि ब्रह्मज्ञानम् ।
१० आश्रमाणामवरोहनिराकरणम् ।
११ ऊर्ध्वरेतसः पातित्ये प्रायश्चित्तम् ।
१२ भ्रष्टस्य कृतप्रायश्चित्तस्याप्यव्यवहार्यत्वम् ।
१३ ऋत्विक्कृताङ्गध्यानस्य स्वामिगामित्वम् ।
१४ मौनस्य विधेयत्वम् ।
१५ भावशुद्धेरेव बाल्यशब्दाभिधेयत्वम् ।
१६ आत्मज्ञानस्यैहिकामुष्मिकत्वव्यवस्था ।
१७ मुक्तेरेकविधत्वम् ।

---

अधि०

चतुर्थाध्यायस्य प्रथमपादे—

१ श्रवणमननादीनामावृत्तिः।
२ आत्मत्वेन ब्रह्मणो ग्रहणम् ।
३ प्रतीकेऽहंदृष्टिनिराकरणम् ।
४ उपास्ये ब्रह्मदृष्टिः।
५ अङ्गेष्वादित्यत्वादिधीकरणम् ।
६ उपासन आसनावश्यकत्वम् ।
७ उपासने दिगादिनियमनिराकरणम् ।
८ उपासनानामामरणावर्तनत्वम् ।
९ ज्ञानिनः पापलेपनिराकरणम् ।
१० ज्ञानिनः पुण्यलेपनिराकरणम् ।
११ ज्ञानादनारब्धपुण्यपापयोरेव निवृत्तिः।
१२ अग्निहोत्रादिनित्यकर्मणो नाशनिराकरणम्।
१३ नित्यकर्मणो विद्यासाधनत्वम् ।
१४ अधिकारिणामपि मुक्तिसंभवः ।

चतुर्थाध्यायद्वितीयपादे—

१ वागादीनां मनसि वृत्तिलयः।
२ मनसः प्राणे लयः।
३ प्राणानां जीवे लयः।
४ ज्ञान्यज्ञानिनोरुत्क्रान्तिसामान्यम्
५ उपासकस्य ब्रह्मणि स्वरूपेण लयनिराकरणम् ।
६ ज्ञानिनः प्राणानां देहादनुत्क्रान्तिः ।

अधि०

७ तत्त्ववित्प्राणानां परमात्मन्येव लयः ।
८ तत्त्वविद्वागादिलयस्य निःशेषत्वम् ।
९ उपासकोत्क्रान्तेर्विशेषः ।
१० रात्रिमृतस्यापि रश्म्यनुसारित्वम्
११ तत्त्वविदो दक्षिणायनेऽपि विद्याफलम् ।

चतुर्थाध्यायतृतीयपादे—

१ अर्चिरादिकस्यैव ब्रह्मलोकमार्गत्वम् ।
२ वायोः संनिवेशः।
३ वरुणादिलोकानां व्यवस्था ।
४ अर्चिरादीनामातिवाहिकत्वम् ।
५ कार्यब्रह्मण एवोत्तरमार्गगम्यत्वम् ।
६ प्रतीकोपासकानां ब्रह्मलोकगतिनिराकरणम्।

चतुर्थाध्यायचतुर्थपादे—

१ मुक्तेर्नवीनत्वनिराकरणम् ।
२ मुक्तेर्ब्रह्मभिन्नतानिराकरणम् ।
३ सविशेषत्वादिव्यवस्थानिराकरणम् ।
४ परलोकगोपासकस्य भोग्यवस्तुसृष्टौ संकल्पहेतुत्वम् ।
५ देहभावाभावयोरैच्छिकत्वम्।
६ ज्ञानिनोऽनेकदेहेषु सात्मकत्वम्।
७ ज्ञानिनो जगत्स्रष्टृत्वनिराकरणम्।

॥ वैयासिकन्यायमालाधिकरणानुक्रमणिका समाप्ता ॥

# ॥ वैयासिकन्यायमालाभूमिका ॥

## ॥ श्रीमद्ब्रह्मणे नमः ॥

यस्मिन्भेदः प्रपञ्चस्य प्रपञ्चे नास्ति यद्भिदा ।
नाश्यं दृश्यमदृश्यं च यज्जलान्सोऽहमक्षरः ॥ १ ॥
गोपालसेवासततानुरक्तश्रीमाधवाधीशसुदृष्टिपुष्टे ।
लक्ष्मीसमुल्लासितकान्तिचन्द्रामात्यप्रसादेन निरन्धकारे ॥ २ ॥
ढुण्ढारदेशे जयपत्तनेऽस्मिन्नधीतिना संस्कृतशास्त्रसार्थे ।
दाधीचविद्वच्छिवदत्तनाम्ना प्रयत्यते शोधनभूमिकार्थम् ॥ ३ ॥

'धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयसंप्राप्तिर्हि वेदार्थज्ञानाधीना' इत्यत्र न केषामप्यार्याणां विप्रतिपत्तिः । वेदश्च "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इत्यापस्तम्बाद्युक्तेर्मन्त्रब्राह्मणोभयात्मकः कर्मोपासनाज्ञानप्रतिपादकः । तत्र—देवद्रव्योभयसाध्यो यागादिः कर्म; ब्रह्मजीवयोरुपास्योपासकत्वदृष्टिरुपासना, जीवब्रह्मणोरभेद एवात्र ज्ञानम् । तत्र च वेदे पूर्वापरविरोधादिना वास्तवार्थविचिकित्सायां प्रसक्तायां तद्वारणाय मीमांसाशास्त्रं रचितम् । तत्र—कर्मसाधिकानां श्रुतीनां विचाररूपो भागः पूर्वकाण्डप्रथमतन्त्रशब्दवाच्यो मीमांसात्वेन प्रसिद्धो जैमिनीयत्वेन ख्यातिं गतः । उपासनाज्ञानसाधिकानां श्रुतीनां विचाररूपो वेदान्तत्वेन प्रसिद्धो भागः शारीरकशब्दवाच्यो वैयासिकत्वेन ख्यातिं गतः । बहूनामृषीणां मीमांसकत्वेऽपि जैमिनीयत्व—वैयासिकत्वमात्रख्यातौ कारणं तु देवा एव जानन्ति । वैयासिकत्वेन ख्यातेऽस्मिन्वेदान्तापरपर्याये मीमांसाभागे षट्पञ्चाशदुत्तरा पञ्चशती सूत्राणां वर्तते । द्विनवत्युत्तरशतकमधिकरणानामस्ति । समुदितस्यापि मीमांसाशास्त्रस्योपरि वृत्तिर्व्याकरणाचार्यभगवत्पाणिनिगुरुवर्षसहोदरेण कथासरित्सागरोपवर्णितनन्दराज्यसमयोत्पन्नभगवदुपवर्षेणाकारि । तथाचोक्तम् "एक आत्मनः शरीरे भावात्" ( ब्र० सू० ३ । ३ । ५३ ) इत्यत्र भाष्ये शंकरभगवत्पादैः—"अत एव च भगवतोपवर्षेण—प्रथमे तन्त्रे आत्मास्तित्वाभिधान-

---

१ उत्कोचादिजन्यान्यायरूपान्धकारशून्ये। २ अत एव शास्त्रसमाप्तिसूत्रावतरणिकायाम् "नन्वेवं सति सातिशयत्वादन्तवत्त्वमैश्वर्यस्य स्यात्, ततश्चैषामावृत्तिः प्रसज्येत, इत्यत उत्तरं भगवान्बादरायणः पठति" इति भाष्ये "शास्त्रसमाप्तिं सूचयन्सूत्रकारं पूजयति—भगवानिति" ॥ इति रत्नप्रभायां चोक्तम् । बादरायणस्तु व्यास एव । तथा चोक्तं त्रिकाण्डशेषे—

"कृष्णद्वैपायनौ वेदव्यासः स्यात्सत्यभारतः ।
पाराशरिः सात्यवतो माठरो बादरायणः, इति ।

प्रसक्तौ शारीरके वक्ष्यामः—इत्युद्धारः कृतः" इति। एतत्सूत्रभाष्यादित एव 'जैमिनीयवैयासिकयोरेकग्रन्थत्वम्' इत्यपि प्रतीयते। ततश्चोक्तवृत्तेर्दुर्लभत्वम्, भाष्यस्य दुरूहत्वं चावलोक्य भाष्यकृच्छंकरभगवद्विद्यावंशजेन श्रीभारतीतीर्थयतीन्द्रेणेयं वैयासिकन्यायमाला रचिता। अयं श्रीभारतीतीर्थयतीन्द्रश्च जैमिनीयन्यायमालाविस्तरकर्तुः श्रीमाधवाचार्यस्य गुरुरिव प्रतिभाति। तथा चोक्तं माधवाचार्येण विस्तरे—

"इन्द्रस्याऽऽङ्गिरसो नलस्य सुमतिः शैब्यस्य मेधातिथि-
धौम्यो धर्मसुतस्य वैन्यनृपतेः स्वोजा निमेर्गौतमिः॥
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो
यद्वत्तस्य विभोरभूत्कुलगुरुर्मन्त्री तथा माधवः॥ १॥
स खलु प्राज्ञजीवातुः सर्वशास्त्रविशारदः॥
अकरोज्जैमिनिमते न्यायमालां गरीयसीम्॥ २॥
तां प्रशस्य सभामध्ये वीरश्रीबुक्कभूपतिः॥
कुरु विस्तरमस्यास्त्वमिति माधवमादिशत्॥ ३॥
स भव्याद्भारतीतीर्थयतीन्द्रचतुराननात्॥
कृपामव्याहतां लब्ध्वा परार्ध्यप्रतिमोऽभवत्॥ ४॥
निर्माय माधवाचार्यो विद्वदानन्ददायिनीम्॥
जैमिनीयन्यायमालां व्याचष्टे बालबुद्धये"॥ ५॥ इति॥

पञ्चदशीव्याख्यात्राऽपि—

"नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ।"

इति प्रतिप्रकरणं व्याख्यामङ्गलश्लोके माधवस्यैव द्वितीयनामविद्यारण्यतो[1] बह्वृचत्वेऽप्यभ्यर्हितत्वेन भारतीतीर्थस्यैव पूर्वनिपातः कृतः। अनेन श्रीभारतीतीर्थयतीन्द्रेण पञ्चदश्यामपि कतिचन प्रकरणानि निर्मितानि॥

व्याससूत्रवृत्तिकर्ता रङ्गनाथस्तु—

"विद्यारण्यकृतैः श्लोकैर्नृसिंहाश्रमसूक्तिभिः॥
संदृब्धा व्याससूत्राणां वृत्तिर्भाष्यानुसारिणी"॥

इति लिखन्विद्यारण्यनामप्रख्यातमाधवाचार्यकृतत्वमेवास्या अपि न्यायमालाया मन्यते। तन्न विचारसहम्। माधवीयत्वमुद्राभूतस्य बुक्कभूपतिवर्णनस्यात्राभावात्। यदि तु—षोडशाध्यायमितस्य समुदितन्यायमालाग्रन्थस्यैकत्वेन माधवाचार्यकृतत्वं न विरुध्यते—इत्युच्यते। तदा—

---

1 संन्यासग्रहणोत्तरं माधवस्यैव विद्यारण्य इति नाम जातमिति दाक्षिणात्यानां किंवदन्ती।

"प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम् ॥
वैयासिकन्यायमाला श्लोकैः संगृह्यते स्फुटम्" ॥

इति पृथग्मङ्गलाचरणस्य वैयर्थ्यापातात् ॥ नच—जैमिनीय—वैयासिकभागसूचनायैव पृथग्मङ्गलकरणम्—इति वाच्यम्, विस्तरकरणस्यापि पृथक्प्रतिज्ञाकरणापत्तेः ॥ अस्मन्मते तु काव्यप्रकाशादिवत्सव्याख्यकारिकाणामेव न्यायमालात्वम् । अत एवाध्यायादिसमाप्तौ—व्याख्यासमाप्तावेव 'श्रीभारतीतीर्थमुनिप्रणीतायां वैयासिकन्यायमालायाम्' इत्येवोपलभ्यते ॥ इत्यलं काकदन्तगणनया ॥

वेदान्तीयसिद्धान्तानां करामलवदनायासदर्शकस्यास्य न्यायमालाग्रन्थस्योपादेयत्वमत्यावश्यकमिति हेतोरस्य प्रकाशनमुचितमिति सकलप्राचीनदुर्लभग्रन्थप्रकाशनशीलैः सकलविद्वत्सुहृत्तमैः 'आपटे' इत्युपाख्यैश्चिमणाजीत्याख्यया प्रसिद्धानां विप्रवर्याणां तनयैर्महादेवशर्मभिरस्य न्यायमालाग्रन्थस्य शोधनायानुमोदितोऽहमपि यथामति शोधनमकार्षम् । तस्यैतस्यातिदुर्लभस्य ग्रन्थस्य शोधनार्थं यैर्महात्मभिर्यथार्थानन्दाश्रमविधायिभ्य उक्तमहाशयेभ्यः पुस्तकप्रेषणेन साहाय्यमकारि, तेषामुपकारवर्णनाय किमुरगराजेन शक्यम्, किंवा हैहयाधिपेन ॥

| पुस्तकप्रेषकनाम । | पुस्तकनाम । | पुस्तकपत्राणि । |
|---|---|---|
| वटोदरनिवासिनां पटवर्धनोपाह्वानां श्री० रा० रा० कृष्णराव भीमाशंकर इत्येतेषाम्— | 'क' इति । | ९४ |
| बडलीग्रामनिवासिनां चिदम्बरदीक्षितकुलोत्पन्नानां श्री० वे०शा०सं०रा०रा० मार्तण्डदीक्षितानाम्— | 'ख' इति । | १९१ |
| मोहमयीनिवासिनां वे० शा० सं० जयकृष्णमहाराजानाम्— | 'ग' इति । | १३० |

एवं पुस्तकत्रयाधारेण यथामति शोधने कृतेऽपि यदि मनुजधर्मत्वात्प्रमादो भवेत्, तर्हि क्षन्तव्यम् । यतः—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

इति प्रार्थयति विदुषामनुचरः शिवदत्तशर्मा ॥

---

१ अनेन—अधिकरणीयानां सर्वेषां पदार्थानां सुग्राह्यत्वं सूचितम् ॥

# वेदान्तभागे मीमांसकानामृषीणां नामानि ।

| ऋषिः | मीमांसकऋषिनामविशिष्टसूत्रम् | अध्याये | पादे | सूत्रे |
|---|---|---|---|---|
| जैमिनिः | "साक्षादप्यविरोधं जैमिनिः" | १ | २ | २८ |
| आश्मरथ्यः | "अभिव्यक्तेरित्याश्मरथ्यः" | १ | २ | २९ |
| बादरिः | "अनुस्मृतेर्बादरिः" | १ | २ | ३० |
| बादरायणः | "तदुपर्यपि बादरायणः संभवात्" | १ | ३ | २६ |
| औडुलोमिः | "उत्क्रमिष्यत एवंभावादित्यौडुलोमिः" | १ | ४ | २१ |
| काशकृत्स्नः | "अवस्थितेरिति काशकृत्स्नः" | १ | ४ | २२ |
| कार्ष्णाजिनिः | "चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः" | ३ | १ | ९ |
| आत्रेयः | "स्वामिनः फलश्रुतेरित्यात्रेयः" | ३ | ४ | ४४ |

ॐ तत्सद्ब्रह्मणे नमः ॥

# वैयासिकन्यायमाला ।

श्रीभारतीतीर्थमुनिप्रणीता ॥

*परिप्सितग्रन्थस्याविघ्नेन परिसमाप्तये प्रचयगमनाय शिष्टाचारपरिपालनाय च विशिष्टेष्टदेवतातत्त्वं गुरुमूर्त्युपाधियुक्तं नमस्कृत्य ग्रन्थं प्रतिजानीते—

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम् ॥
वैयासिकन्यायमाला श्लोकैः संगृह्यते स्फुटम् ॥ १ ॥

प्रणम्येति । व्यासेनोक्ता वैयासिकी वेदान्तवाक्यार्थनिर्णायकान्यधिकरणानि न्यायाः, तेषामनुक्रमेण ग्रथनं माला । यद्यप्येषा सूत्रभाष्यकारादिभिः प्रपञ्चिता, तथाऽपि सूत्रादीनामतिप्राज्ञविषयत्वान्मन्दबुद्ध्यनुग्रहाय श्लोकैरेषा माला स्फुटं संगृह्यते ॥

तत्रैकैकमधिकरणं पञ्चावयवम् । विषयः, संदेहः, संगतिः, पूर्वपक्षः, सिद्धान्तश्चेति पञ्चावयवाः । तेषां संग्रहप्रकारं दर्शयति—

एको विषयसंदेहपूर्वपक्षावभासकः ॥
श्लोकोऽपरस्तु सिद्धान्तवादी संगतयः स्फुटाः ॥ २ ॥

तत्रैकैकस्याधिकरणस्य संग्राहकौ द्वौ द्वौ श्लोकौ । तयोराद्यश्लोकस्य पूर्वार्धेन द्वाववयवौ संगृह्येते । उत्तरार्धेनैकः । द्वितीयश्लोकेन चैकः । यद्यपि संगत्याख्य एवोऽवयवः शिष्यते, तथाऽपि—प्रत्यधिकरणं न पृथक्संग्रहीतव्यो भवति । सकृद्व्युत्पन्नस्य पुरुषस्य स्वयमेवोहितुं शक्यत्वात् ॥

संगतिं विभज्य व्युत्पादयति—

शास्त्रेऽध्याये तथा पादे न्यायसंगतयस्त्रिधा ॥
शास्त्रादिविषये ज्ञाते तत्तत्संगतिरूह्यताम् ॥ ३ ॥

शास्त्रप्रतिपाद्यम्, अध्यायप्रतिपाद्यम्, पादप्रतिपाद्यं चार्थमवगम्य शास्त्रसंगतिः, अध्यायसंगतिः, पादसंगतिश्च,—इति तिस्रः संगतय ऊहितुं शक्यन्ते ॥

---

* "वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम्" अयं प्रारम्भश्लोकः 'ख. ग.' पुस्तकयोरधिकोऽस्ति ।

---

१ ख. ग. °तस्य ग्र° । २ क. ग. °शिष्ट° । ३ ख. °त्य वैयासिकीत्युत्तरार्धेन ग्र° । ४ क. ख. °यासकिन्या° । ५ ग अत्रैक° । ६ क. °तये स्फुटः ॥ २ ॥ । ७ क. °केनैकः । ८ क. °पि नासौ प्र° । ९ ख. °त्रपु° । १० ख. °षयज्ञाने त° । ११ ख. तत्संगतिरुदाहृता ॥ ३ ॥ शा° ।

शास्त्रप्रतिपाद्यम्, अध्यायप्रतिपाद्यं च दर्शयति—

**शास्त्रं ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्विधाः ॥**
**समन्वयाविरोधौ द्वौ साधनं च फलं तथा ॥ ४ ॥**

सर्वेषां वेदान्तवाक्यानां ब्रह्मणि तात्पर्येण पर्यवसानं प्रथमेनाध्यायेन प्रतिपाद्यते । द्वितीयेन संभावितविरोधः परि[३]ह्रियते । तृतीयेन विद्यासाधननिर्णयः । चतुर्थेन विद्याफलनिर्णयः । इत्येतेऽध्यायानामर्थाः ॥

तत्र प्रथमाध्यायगतपादार्थान्विभजते—

**समन्वये स्पष्टलिङ्गमस्पष्टत्वेऽप्युपास्यगम् ॥**
**ज्ञेयगं पदमात्रं च चिन्त्यं पादेष्वनुक्रमात् ॥ ५ ॥**

स्पष्टब्रह्मलिङ्गयुक्तं वाक्यजातं प्रथमपादे चिन्त्यम् । तद्यथा—"अन्तस्तद्धर्मोपदेशात्" [ ब्र० सू० १ । १ । २० ] इत्यत्र सार्वज्ञ्य—सार्वात्म्य—सर्वपापविरहादिकं ब्रह्मणोऽसाधारणतया स्पष्टं लिङ्गम् । अस्पष्टब्रह्मलिङ्गत्वे सत्युपास्यविषयवाक्यजातं द्वितीयपादे चिन्त्यम् । तद्यथा—प्रथमाधिकरणविषये शाण्डिल्योपास्तिवाक्ये मनोमयत्वप्राणशरीरत्वादिकं सोपाधिकब्रह्मणो जीवस्य च साधारणत्वादस्पष्टं ब्रह्मलिङ्गम् । तृतीयपादे त्वस्पष्टब्रह्मलिङ्गत्वे सति ज्ञेयब्रह्मविषयं वाक्यजातं चिन्त्यम् । तद्यथा—प्रथमाधिकरणे मुण्डकगतब्र[११]ह्मात्मतत्त्ववाक्ये द्युपृथिव्यन्त[१२]रिक्षप्रोतत्वं सूत्रात्मनः परब्रह्मणश्च साधारणत्वादस्पष्टं ब्रह्मलिङ्गम् । यद्यपि द्वितीयपादे कठवल्ल्यादिगतब्रह्म[१३]तत्त्ववाक्यानि विचारितानि, तृतीयपादे च दहरोपासनवाक्यं विचारितम् । तथाऽप्यवान्तरसंगतिलोभेन तद्विचारस्य प्रासङ्गिकत्वान्न पादार्थयोः सांकर्यापत्तिः । इत्थं पादत्रयेण वाक्यविचारः समापितः । चतुर्थपादे[१४]नाव्यक्तपदमजापदं चेत्येवमादि संदिग्धं पदं चिन्त्यम् ॥

द्वितीयाध्यायगतपादार्थान्विभजते—

**ःमृतितर्काभ्यामविरोधोऽन्यदुष्टता ॥**
**ुतेरप्यविरुद्धता ॥ ६ ॥**

दिस्मृतिभिः सांख्यादिप्रयुक्ततर्कैश्च विरोधो वेदान्त-
पादे—सांख्यादिमतानां दुष्टत्वं दर्शितम् । तृतीय-

---

३ क. °रिह्रीय° । ४ क. °यार्थाः । ५ क. °ष्वदः
ग. °यप्रा° । ९ ख. °रीरादिकमौपा° । १० ग.
नत्वं । १३ क. °ह्मवा° । १४ क. °दे त्वव्य° ।

पादे—पूर्वभागेन पञ्चमहाभूतश्रुतीनां परस्परविरोधः परिहृतः, उत्तरभागेन जीवश्रुतीनाम्। चतुर्थपादे—लिङ्गशरीरश्रुतीनां विरोधपरिहारः ॥

**तृतीयाध्यायगतपादार्थान्विभजते—**

**तृतीये विरतिस्तत्त्वंपदार्थपरिशोधनम् ॥**
**गुणोपसंहृतिर्ज्ञानबहिरङ्गादिसाधनम् ॥ ७ ॥**

**प्रथमपादे**—जीवस्य परलोकगमनागमने विचार्य वैराग्यं निरूपितम्। **द्वितीयपादे**—पूर्वभागेन त्वंपदार्थः शोधितः, उत्तरभागेन तत्पदार्थः। **तृतीयपादे**—सगुणविद्यासु गुणोपसंहारो निरूपितः। निर्गुणे ब्रह्मण्यपुनरुक्तपदोपसंहारश्च। **चतुर्थपादे च**—निर्गुणज्ञानस्य[1] बहिरङ्गसाधनभूतान्याश्रमयज्ञादीनि, अन्तरङ्गसाधनभूतशमदमनिदिध्यासनादीनि च निरूपितानि ॥

**चतुर्थाध्यायगतपादार्थान्विभजते—**

**चतुर्थे जीवतो मुक्तिरुत्क्रान्तेर्गतिरुत्तरा ॥**
**ब्रह्मप्राप्तिब्रह्मलोकाविति पादार्थसंग्रहः ॥ ८ ॥**

**प्रथमपादे**—श्रवणाद्यावृत्त्या निर्गुणमुपासनया सगुणं वा ब्रह्म साक्षात्कृत्य जीवतः पापपुण्यलेपविनाशलक्षणा मुक्तिरभिहिता। **द्वितीयपादे**—म्रियमाणस्योत्क्रान्तिप्रकारो निरूपितः। **तृतीयपादे**[3]—सगुणविदो मृतस्योत्तरमार्गोऽभिहितः। **चतुर्थपादे**—पूर्वभागेन निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिरभिहिता। उत्तरभागेन सगुणब्रह्मविदो ब्रह्मलोके स्थितिर्निरूपिता। एवं पादार्थाः संगृहीताः ॥

सन्त्वेवं शास्त्राध्यायपादप्रतिपाद्या अर्थाः। किं तत इत्यत आह—

**ऊहित्वा संगतीस्तिस्रस्तथाऽवान्तरसंगतीः ॥**
**ऊहेदाक्षेपदृष्टान्तप्रत्युदाहरणादिकाः[5] ॥ ९ ॥**

तद्यथा—ईक्षत्यधिकरणे—"तदैक्षत"— इति वाक्यं प्रधानपरं, ब्रह्मपरं वा, इति विचार्यते। तस्य विचारस्य ब्रह्मसंबन्धित्वाद्ब्रह्मविचार[6]शास्त्र[7]संगतिः। 'वाक्यं ब्रह्मणि तात्पर्यवत्' इति निर्णयात्समन्वयाध्यायसंगतिः। ईक्षणस्य चेतने ब्रह्मण्यसाधारणत्वेन स्पष्टब्रह्मलिङ्गत्वात्प्रथमपादसंगतिः। एवं सर्वेष्वप्यधिकरणेषु[9] यथार्थं[10] संगतित्रयमूहनीयम्। अवान्तरसंगतिस्त्वनेकधा भिद्यते—आक्षेपसंगतिः, दृष्टान्तसंगतिः, प्रत्युदाहरणसंगतिः, प्रासङ्गिकसंगतिः, इत्येवमादिः ॥

---

१ख. °ङ्गश्रु°। २ क. °नबहि°। ३ क. °दे मृतस्य सगुणविद उत्त°। ४ ख. °णानि च ॥ ९ ॥ त°। ५ ग. °दिकम् ॥ ९ ॥ त°। ६ ख. °चारः शा°। ७ ग.° शास्त्रे सं°। ८ क. °तनब्र°। ९ ख. सर्वाधि°। १० क. °थायोग्यं सं°।

शास्त्रप्रतिपाद्यम्, अध्यायप्रतिपाद्यं च दर्शयति—

शास्त्रं ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्विधाः ॥
समन्वयाविरोधौ द्वौ साधनं च फलं तथा ॥ ४ ॥

सर्वेषां वेदान्तवाक्यानां ब्रह्मणि तात्पर्येण पर्यवसानं प्रथमेनाध्यायेन प्रतिपाद्यते। द्वितीयेन संभावितविरोधः परिह्रियते[3]। तृतीयेन विद्यासाधननिर्णयः। चतुर्थेन विद्याफलनिर्णयः। इत्येतेऽध्यायानामर्थाः ॥

तत्र प्रथमाध्यायगतपादार्थान्विभजते—

समन्वये स्पष्टलिङ्गमस्पष्टत्वेऽप्युपास्यगम् ॥
ज्ञेयगं पदमात्रं च चिन्त्यं पादेष्वनुक्रमात् ॥ ५ ॥

स्पष्टब्रह्मलिङ्गयुक्तं वाक्यजातं प्रथमपादे चिन्त्यम्। तद्यथा—"अन्तस्तद्धर्मोपदेशात्" [ब्र० सू० १।१।२०] इत्यत्र सार्वज्ञ्य—सार्वात्म्य—सर्वपापविरहादिकं ब्रह्मणोऽसाधारणतया स्पष्टं लिङ्गम्। अस्पष्टब्रह्मलिङ्गत्वे सत्युपास्यविषयवाक्यजातं द्वितीयपादे चिन्त्यम्। तद्यथा—प्रथमाधिकरणविषये शाण्डिल्योपास्तिवाक्ये मनोमयत्वप्राणशरीरत्वादिकं सोपाधिकब्रह्मणो जीवस्य च साधारणत्वादस्पष्टं ब्रह्मलिङ्गम्। तृतीयपादे त्वस्पष्टब्रह्मलिङ्गत्वे सति ज्ञेयब्रह्मविषयं वाक्यजातं चिन्त्यम्। तद्यथा—प्रथमाधिकरणे मुण्डकगतब्रह्मात्मतत्त्ववाक्ये द्युपृथिव्यन्तरिक्षप्रोतत्वं[12] सूत्रात्मनः परब्रह्मणश्च साधारणत्वादस्पष्टं ब्रह्मलिङ्गम्। यद्यपि द्वितीयपादे कठवल्ल्यादिगतब्रह्म[13]तत्त्ववाक्यानि विचारितानि, तृतीयपादे च दहरोपासनवाक्यं विचारितम्। तथाऽप्यवान्तरसंगतिलोभेन तद्विचारस्य प्रासङ्गिकत्वान्न पादार्थयोः सांकर्यापत्तिः। इत्थं पादत्रयेण वाक्यविचारः समापितः। चतुर्थपादे[14]नाव्यक्तपदमजापदं चेत्येवमादि संदिग्धं पदं चिन्त्यम् ॥

द्वितीयाध्यायगतपादार्थान्विभजते—

द्वितीये स्मृतितर्काभ्यामविरोधोऽन्यदुष्टता ॥
भूतभोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता ॥ ६ ॥

प्रथमपादे—सांख्ययोगकाणादादिस्मृतिभिः सांख्यादिप्रयुक्ततर्कैश्च विरोधो वेदान्तसमन्वयस्य परिहृतः। द्वितीयपादे—सांख्यादिमतानां दुष्टत्वं दर्शितम्। तृतीय-

---

१ ग. °पादप्रतिपाद्यं च। २ ख °थमाध्या°। ३ क. °रिक्षीय°। ४ क. °यार्थाः। ५ क. °ष्वदः क्र°। ६ ख. ग. °रहत्वादि°। ७ क. °षयिवा°। ८ ग. °यप्रा°। ९ ख. °रीरादिक्रमोपा°। १० ग. °ष्टलि°। ११ क. °ब्रह्मत°। १२ क. °रिक्षाद्यायतनत्वं। १३ क. °ह्मवा°। १४ क. °दे त्वव्य°। १५ क. °दिग्धप°।

पादे—पूर्वभागेन पञ्चमहाभूतश्रुतीनां परस्परविरोधः परिहृतः, उत्तरभागेन जीवश्रुतीनाम् । चतुर्थपादे—लिङ्गशरीरश्रुतीनां विरोधपरिहारः ॥

**तृतीयाध्यायगतपादार्थान्विभजते—**

**तृतीये विरतिस्तत्त्वंपदार्थपरिशोधनम् ॥**
**गुणोपसंहृतिर्ज्ञानबहिरङ्गादिसाधनम् ॥ ७ ॥**

**प्रथमपादे**—जीवस्य परलोकगमनागमने विचार्य वैराग्यं निरूपितम् । **द्वितीयपादे**—पूर्वभागेन त्वंपदार्थः शोधितः, उत्तरभागेन तत्पदार्थः । **तृतीयपादे**—सगुणविद्यासु गुणोपसंहारो निरूपितः । निर्गुणे ब्रह्मण्यपुनरुक्तपदोपसंहारश्च । **चतुर्थपादे च**—निर्गुणज्ञानस्य बहिरङ्गसाधनभूतान्याश्रमयज्ञादीनि, अन्तरङ्गसाधनभूतशमदमनिदिध्यासनादीनि च निरूपितानि ॥

**चतुर्थाध्यायगतपादार्थान्विभजते—**

**चतुर्थे जीवतो मुक्तिरुत्क्रान्तेर्गतिरुत्तरा ॥**
**ब्रह्मप्राप्तिब्रह्मलोकाविति पादार्थसंग्रहः ॥ ८ ॥**

**प्रथमपादे**—श्रवणाद्यावृत्त्या निर्गुणमुपासनया सगुणं वा ब्रह्म साक्षात्कृत्य जीवतः पापपुण्यलेपविनाशलक्षणा मुक्तिरभिहिता । **द्वितीयपादे**—म्रियमाणस्योत्क्रान्तिप्रकारो निरूपितः । **तृतीयपादे**[३]—सगुणविदो मृतस्योत्तरमार्गोऽभिहितः । **चतुर्थपादे**—पूर्वभागेन निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिरभिहिता । उत्तरभागेन सगुणब्रह्मविदो ब्रह्मलोके स्थितिर्निरूपिता । एवं पादार्थाः संगृहीताः ॥

सन्त्वेवं शास्त्राध्यायपादप्रतिपाद्या अर्थाः । किं तत इत्यत आह—

**ऊहित्वा संगतीस्तिस्रस्तथाऽवान्तरसंगतीः ॥**
**ऊहेदाक्षेपदृष्टान्तप्रत्युदाहरणादिकाः ॥ ९ ॥**

तद्यथा—ईक्षत्यधिकरणे—"तदैक्षत"— इति वाक्यं प्रधानपरं, ब्रह्मपरं वा, इति विचार्यते । तस्य विचारस्य ब्रह्मसंबन्धित्वाद्ब्रह्मविचारशास्त्रसंगतिः । 'वाक्यं ब्रह्मणि तात्पर्यवत्' इति निर्णयात्समन्वयाध्यायसंगतिः । ईक्षणस्य चेतने ब्रह्मण्यसाधारणत्वेन स्पष्टब्रह्मलिङ्गत्वात्प्रथमपादसंगतिः । एवं सर्वेष्वप्यधिकरणेषु यथार्थं संगतित्रयमूहनीयम् । अवान्तरसंगतिस्त्वनेकधा भिद्यते—आक्षेपसंगतिः, दृष्टान्तसंगतिः, प्रत्युदाहरणसंगतिः, प्रासङ्गिकसंगतिः, इत्येवमादिः ॥

---

१ख. °हृश्रु° । २ क. °नबाहि° । ३ क. °दे मृतस्य सगुणविद उत्त° । ४ ख. °णानि च ॥ ९ ॥ त° । ५ ग. °दिकम् ॥ ९ ॥ त° । ६ ख. °चारः शा° । ७ ग.° शास्त्रे सं° । ८ क. °तनब्र° । ९ ख. सर्वाधि° । १० क. °थायोग्यं सं° ।

सेयमवान्तरसंगतिर्व्युत्पन्नेनोहितुं शक्यते । अतस्तां व्युत्पादयति—

पूर्वन्यायस्य सिद्धान्तयुक्तिं वीक्ष्य परे नये ॥
पूर्वपक्षस्य युक्तिं च तत्राऽऽक्षेपादि योजयेत् ॥ १० ॥

तद्यथा प्रथमाधिकरणे 'ब्रह्मविचारशास्त्रमारम्भणीयम्' इति सिद्धान्तः । तत्र युक्तिः—'ब्रह्मणः संदिग्धत्वात्' इति । द्वितीयाधिकरणस्य 'जगज्जन्मादि ब्रह्मलक्षणं न भवति' इति पूर्वपक्षः । तत्र युक्तिः—'जन्मादेर्जगन्निष्ठत्वात्' इति । तदुभयमवलोक्य तयोराक्षेपसंगतिं योजयेत् । 'संदिग्धत्वाद्ब्रह्म विचार्यम्' इत्येतदयुक्तम् । जन्मादेरन्यनिष्ठत्वेन ब्रह्मणो लक्षणाभावे सति ब्रह्मैव नास्ति, कुतस्तस्य संदिग्धत्वं विचार्यत्वं च—इत्याक्षेपसंगतिः । दृष्टान्तप्रत्युदाहरणसंगती चात्र योजयितुं शक्येते । 'यथा संदिग्धत्वेन हेतुना ब्रह्मणो विचार्यत्वम्, तथा—जन्माद्यन्यनिष्ठत्वेन हेतुना ब्रह्मणो लक्षणं नास्ति' इति दृष्टान्तसंगतिः । 'यथा विचार्यत्वे हेतुरस्ति, न तथा लक्षणसद्भावे हेतुं पश्यामः' इति प्रत्युदाहरणसंगतिः । ते एते दृष्टान्तप्रत्युदाहरणसंगती सर्वत्र सुलभे । पूर्वाधिकरणसिद्धान्तवदुत्तराधिकरणपूर्वपक्षे हेतुमत्त्वसाम्यस्य, उत्तराधिकरणसिद्धान्ते हेतुशून्यत्ववैलक्षण्यस्य च मन्दैरप्युत्प्रेक्षितुं शक्यत्वात् । आक्षेपसंगतिर्यथायोगमुन्नेया । अथ प्रासङ्गिकसंगतिरुदाह्रियते—देवताधिकरणस्याधिकारविचाररूपत्वात्समन्वयाध्याये ज्ञेयब्रह्मवाक्यविषये तृतीयपादे च संगत्यभावेऽपि बुद्धिस्थावान्तरसंगतिरस्ति । तथाहि—पूर्वाधिकरणे 'अङ्गुष्ठमात्रवाक्यस्य ब्रह्मपरत्वादङ्गुष्ठमात्रत्वं ब्रह्मणो मनुष्यहृदयापेक्षम्, मनुष्याधिकारत्वाच्छास्त्रस्य' इत्युक्तम् । तत्प्रसङ्गेन देवताधिकारो बुद्धिस्थः । सेयं प्रासङ्गिकसंगतिः । तदेवं न्यायसंगतिर्निरूपिता ॥

---

अथेदानीं प्रत्यधिकरणमवयवचतुष्टयं श्लोकाभ्यां संगृह्यते—

( तत्र ( प्रथमे ब्रह्मणो विचार्यत्वाधिकरणे ) शास्त्रस्य प्रथमं सूत्रम् ॥ )

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

प्रथमाधिकरणमारचयति—

अविचार्यं विचार्यं वा ब्रह्माध्यासानिरूपणात् ॥
असंदेहाफलत्वाभ्यां न विचारं तदर्हति ॥ ११ ॥
अध्यासोऽहंबुद्धिसिद्धोऽसङ्गं ब्रह्म श्रुतीरितम् ॥
[illegible]मुक्तिभावाच्च विचार्यं ब्रह्म वेदतः ॥ १२ ॥

---

[illegible] । २ क. 'पक्षोक्तयु' । ३ क. 'तदुक्तम् । ४ ग. 'वे प' । ५ ख. [illegible]
७ क. 'कारित्वा' । ८ क. ग. 'तिर्व्युत्पादिता । ९ ग. 'ख्यास्यामवि' ।

“आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः” [ बृह० २। ४। ५ ] इत्यत्राऽऽत्मदर्शनफलमुद्दिश्य तत्साधनत्वेन श्रवणं विधीयते। श्रवणं नाम वेदान्तवाक्यानां ब्रह्मणि तात्पर्यं निर्णेतुमनुकूलो न्यायविचारः। तदेतद्विचारविधायकं वाक्यं विषयः। न च—अयं विषयः श्लोकयोर्न संगृहीतः—इति शङ्क्यम्, संदेहसंग्रहेणैवार्थात्तत्संग्रहप्रतीतेः। ‘ब्रह्मविचारात्मकं न्यायनिर्णयात्मकं शास्त्रमनारभ्यम्, आरभ्यं वा,’ इति संदेहः। पूर्वोत्तरपक्षयुक्तिद्वयं सर्वत्र संदेहबीजमुन्नेयम्। तत्र ‘अनारभ्यम्’ इति तावत्प्राप्तम्, विषयप्रयोजनयोरभावात्। संदिग्धं हि विचारविषयो भवति। ब्रह्म त्वसंदिग्धम्। तथाहि—तत्किं ब्रह्माकारेण संदिह्यते, आत्माकारेण वा। नाऽऽद्यः, “सत्यं ज्ञानमनन्तं ब्रह्म” [ तैत्ति० २। १। १ ] इति वाक्येन ब्रह्माकारस्य निश्चयात्। न द्वितीयः, अहंप्रत्ययेनाऽऽत्माकारस्यापि निश्चयात्—अध्यस्वात्मविषयत्वेन भ्रान्तोऽहंप्रत्ययः—इति चेत्। न, अध्यासानिरूपणात्। तमःप्रकाशवद्विरुद्धस्वभावयोर्जडाजडयोर्देहात्मनोः शुक्तिकारजतवदन्योन्यतादात्म्याध्यासो न निरूपयितुं शक्यते। तस्मादभ्रान्ताभ्यां श्रुत्यहंप्रत्ययाभ्यां निश्चितस्यासंदिग्धत्वाद्विचारस्य न विषयोऽस्ति। नापि प्रयोजनं पश्यामः, उक्तप्रकारेण ब्रह्मात्मनि निश्चितेऽपि मुक्त्यदर्शनात्। तस्मात्—‘ब्रह्म विचारानर्हम्’ इति शास्त्रमनारम्भणीयम्—इति पूर्वपक्षः।

अत्रोच्यते—शास्त्रमारम्भणीयम्। कुतः—विषयप्रयोजनसद्भावात्। श्रुत्यहंप्रत्यययोर्विप्रतिपत्त्या संदिग्धं ब्रह्माऽऽत्मवस्तु। “अयमात्मा ब्रह्म” [बृह० २। ५। १९ ] इति श्रुतिरसङ्गं ब्रह्मात्मत्वेनोपदिशति। ‘अहं मनुष्यः’ इत्याद्यहंबुद्धिर्देहतादात्म्याध्यासेनाऽऽत्मानं गृह्णाति। अध्यासस्य च दुर्निरूपणत्वमलंकाराय। तस्मात्संदिग्धं वस्तु विषयः। तन्निश्चयेन मुक्तिलक्षणप्रयोजनं श्रुत्या विद्वदनुभवेन च प्रसिद्धम्। तस्मात्—वेदान्तवाक्यविचारमुखेन ब्रह्मणो विचारार्हत्वाच्छास्त्रमारम्भणीयम्—इति सिद्धान्तः॥

---

( द्वितीये ब्रह्मणो लक्षणाधिकरणे सूत्रम्॥)

## जन्माद्यस्य यतः॥ २॥

द्वितीयाधिकरणमारचयति—

---

१ क. °र्थात्संदेहसं° । ख. °र्थात्संग्र° । २ क. योजनाभा° । ३ क. °ह्म न विचारमर्हति’ इ° । ग. °ह्म तत्त्वविचारमर्हति’ इ° । ४ ख. °स्तु विषयः । “अ° । ५ क. °देहादिता° । ६ क. °पत्व° । ७ ख. °न्तवि° । ८ ख. सिद्धम् ।

लक्षणं ब्रह्मणो नास्ति किंवाऽस्ति, नहि विद्यते ॥
जन्मादेरन्यनिष्ठत्वात्सत्यादेश्चाप्रसिद्धितः ॥ १३ ॥
ब्रह्मनिष्ठं कारणत्वं स्याल्लक्ष्म स्रग्भुजङ्गवत् ॥
लौकिकान्येव सत्यादीन्यखण्डं लक्षयन्ति हि ॥ १४ ॥

"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद्ब्रह्म" [ तैत्ति० ३ । १ । १ ] इति, "सत्यं ज्ञानमनन्तं ब्रह्म" [ तैत्ति० २ । १ । १ ] इति वाक्यद्वयं विषयः । प्रयन्ति म्रियमाणानीत्यर्थः । तत्र—'श्रूयमाणं ब्रह्मलक्षणं न घटते, घटते वा'—इति संशयः । न घटते । तथाहि—किं जन्मादिकं तल्लक्षणम्, उत सत्यादिकम् । नाऽऽद्यः, तस्य जगन्निष्ठत्वेन ब्रह्मसंबन्धाभावात् । द्वितीयेऽपि लोकप्रसिद्धस्य सत्यज्ञानादेः स्वीकारे भिन्नार्थत्वादखण्डं ब्रह्म न सिध्येत्, अप्रसिद्धस्य तु सत्यादेर्लक्षणत्वमयुक्तम् । तस्मात्—तटस्थलक्षणं स्वरूपलक्षणं च न विद्यते ।

अत्रोच्यते—यल्लक्षणं रूपानन्तर्भूतं सत्पदार्थान्तरव्यवस्थाहेतुः, तत्तटस्थलक्षणम् । जन्मादेरन्यनिष्ठत्वेऽपि तत्कारणत्वं ब्रह्मणि कल्पनया संबद्धं तटस्थलक्षणं भविष्यति । "यो भुजङ्गः सा स्रक्" इतिवत् 'यज्जगत्कारणं तद्ब्रह्म' इति कल्पितेनापि वस्तुनोपलक्षयितुं शक्यत्वात् । भिन्नार्थानामपि पितृसुतभ्रातृजामात्रादिशब्दानामेकदेवदत्तपर्यवसायित्वे यथा न विरोधः, तथा लोकसिद्धभिन्नार्थवाचिसत्यादिशब्दानामखण्डब्रह्मपर्यवसायित्वे स्वरूपलक्षणसिद्धिः । इत्युभयमप्युपपन्नम् ॥

---

( तृतीये ब्रह्मणो वेदकर्तृत्ववेदैकमेयताधिकरणे सूत्रम् ॥ )

## शास्त्रयोनित्वात् ॥ ३ ॥

तृतीयाधिकरणस्य प्रथमं वर्णकमारचयति—

न कर्तृ ब्रह्म वेदस्य किंवा कर्तृ, न कर्तृ तत् ॥
विरूप नित्यया वाचेत्येवं नित्यत्ववर्णनात् ॥ १५ ॥
...नाद्युक्तेर्नित्यत्वं पूर्वसाम्यतः ॥
... कर्तृत्वात्सर्वविद्भवेत् ॥ १६ ॥

... यजुर्वेदः सामवेदः" [बृह० २ । ४ ।
...देतस्य नित्यसिद्धस्य ब्रह्मणो निःश्वास

---

१ ग. ...स्य स । २ ख. ग. अत्र । ३ क. °शये । न । ४ ख. °दि त° । ५ ख. ग. °द्धसत्यज्ञानादिस्वी° । ६ ख. ग° °ते—जन्मा° । ७ ग. संबन्धं । ८ ख. °र्थवस्तूना° । ९ ख. ग. °यमुप° ।

इवायत्नेन सिद्धम्' इत्यर्थः—'ब्रह्म वेदं करोति, नकरोति वा'—इति संदेहः। न करोति, वेदस्य नित्यत्वात्। "वाचा विरूप नित्यया" इत्यस्मिन्मन्त्रे—'विरूप' इति देवतां संबोध्य 'नित्यया वाचा स्तुतिं प्रेरय' इत्येवं प्रार्थ्यते। नित्या वाग्वेद एव,

"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः"।

इति स्मृतेः। अतः—न वेदकर्तृ ब्रह्म। इति प्राप्ते,

ब्रूमः—ब्रह्म वेदस्य कर्तृ भवितुमर्हति। कुतः—निःश्वसितन्यायेनाप्रयत्नोत्पत्त्यवगमात्। "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे" इति, सर्वैर्यज्ञै[2]र्हूयमानाद्यज्ञशब्दवाच्याद्ब्रह्मणो विस्पष्टमेव वेदोत्पत्तिश्रवणाच्च। अप्रयत्नोत्पत्त्यैवार्थेषु बुद्ध्या रचितैः कालिदासादिवाक्यैर्वैलक्षण्यादपौरुषेयत्वम्। प्रतिसर्गं पूर्वसाम्येनोत्पन्नैः प्रवाहरूपेण नित्यता। सर्वजगद्व्यवस्थावभासिवेदकर्तृत्वनिरूपणेन ब्रह्मणः सर्वज्ञत्वं निरूपितं भवति॥

द्वितीयं वर्णकमाह—

अस्त्यन्यमेयताऽप्यस्य किंवा वेदैकमेयता॥
घटवत्सिद्धवस्तुत्वाद्ब्रह्मान्येनापि मीयते॥ १७॥
रूपलिङ्गादिराहित्यान्नास्य मान्तरयोग्यता॥
तं त्वौपनिषदेत्यादौ प्रोक्ता वेदैकमेयता॥ १८॥

"तं त्वौपनिषदं पुरुषं पृच्छामि" [बृह० ३। ९। २६] इति शाकल्यं प्रति याज्ञवल्क्येनोक्तवाक्ये परब्रह्मरूपस्य पुरुषस्योपनिषद्वेद्यत्वं प्रतीयते। तद्वाक्यं विषयः। तत्र—'ब्रह्मणः प्रत्यक्षादिगम्यत्वमस्ति, न वा' इति संशयः। पूर्वपक्षस्तु विस्पष्टः।

रूपरसाद्यभावान्नेन्द्रिययोग्यता। लिङ्गसादृश्यादिराहित्याच्च नानुमानोपमानादियोग्यता। 'उपनिषत्स्वेवाधिगतः' इति व्युत्पत्त्या "नावेदविन्मनुते तं बृहन्तम्" इत्यन्यनिषेधश्रुत्या चं वेदैकमेयत्वम्। भाष्यकारैः "जन्मादि" सूत्रे—"श्रुत्यादयोऽनुभवादयश्च यथासंभवमिह प्रमाणम्" इत्यन्यमेयत्वमङ्गीकृतम्—इति चेत्। बाढम्। [12]प्रथमतः श्रुत्यैव प्रमिते ब्रह्मणि पश्चादनुवादरूपेणानुमानानुभवयोरङ्गीकारात्। अतो[13] वेदैकमेयं ब्रह्म॥

---

१ क. श्रुतेः। २ ग. °र्यैज्ञै हूय°। ३ ख. ग. °त्पत्तौ चार्थं बुद्ध्वा र°। ४ ग. °त्पत्तेः प्र°। ५ ग. °वा वैदिक°। ६ क. मानान्त°। ७ क. ख. °षदित्या°। ८ क. विस्फुटः। ९ ख. रूपाद्य°। १० ख. ग. °मानादि°। ११ ग. च वैदिक°। १२ ख. ग. प्रयत्नतः। १३ ग. °तो वैदिकमे°।

( चतुर्थे वेदान्तानां ब्रह्मैकपरत्वाधिकरणे सूत्रम् ॥ )

## तत्तु समन्वयात् ॥ ४ ॥

चतुर्थाधिकरणस्य प्रथमवर्णकमाह—

वेदान्ताः कर्तृदेवादिपरा ब्रह्मपरा उत ॥
अनुष्ठानोपयोगित्वात्कर्त्रादिप्रतिपादकाः ॥ १९ ॥
भिन्नप्रकरणाल्लिङ्गषट्काच्च ब्रह्मबोधिकाः ॥
सति प्रयोजनेऽनर्थहानेऽनुष्ठानतोऽत्र किम् ॥ २० ॥

स्पष्टौ विषयसंदेहौ । जीवप्रकाशकवाक्यानि कर्तृपराणि । ब्रह्मप्रकाशकवाक्यानि देवतापराणि । सृष्टिप्रकाशकवाक्यानि साधनपराणि । तथा सति वेदान्तानामनुष्ठानोपयोगित्वं भविष्यति । ब्रह्मपरत्वे त्वनुष्ठानासंभवान्निष्प्रयोजनत्वं स्यात् । तस्मात्— वेदान्ताः कर्तृदेवतासाधनप्रतिपादकाः ॥

अत्रोच्यते—ब्रह्मपरा वेदान्ताः । कुतः—भिन्नप्रकरणपठितानां तेषां कर्त्रादिप्रतिपादकतया कर्मशेषत्वासंभवात् । तात्पर्यनिश्चयहेतुलिङ्गषट्केन ब्रह्मपरत्वसंभवाच्च । लिङ्गषट्कं पूर्वाचार्यैर्दर्शितम्—

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिश्चये" इति ।

"सदेव सोम्येदमग्र आसीत्" इत्युपक्रमः । "ऐतदात्म्यमिदं सर्वम् । तत्सत्यं स आत्मा तत्त्वमसि" इत्युपसंहारः । तयोर्ब्रह्मविषयत्वेनैकरूप्यमेकं लिङ्गम् । असकृत् "तत्त्वमसि" इत्युक्तिरभ्यासः । मानान्तरागम्यत्वमपूर्वत्वम् । एकविज्ञानेन सर्वविज्ञानं फलम् । उत्पत्तिस्थितिप्रलयप्रवेशनियमनानि पञ्चार्थवादाः । मृदादिदृष्टान्ता उपपत्तयः । एतैर्लिङ्गैर्ब्रह्मपरत्वं निश्चेयम् । न चानुष्ठानमन्तरेण प्रयोजनाभावः, 'नायं सर्पः' इत्यादाविव बोधादनर्थनिवृत्तेः संभवात् ॥

द्वितीयं वर्णकमाह—

प्रतिपत्तिं विधित्सन्ति ब्रह्मण्यवसिता उत ॥
वेधातारो मननादेश्च कीर्तनात् ॥ २१ ॥
न्त विधिः शास्त्रत्वं[13] शंसनादपि ॥
बोधाद्ब्रह्मण्यवसितास्ततः ॥ २२ ॥

---

१ क. °त्वेऽनु° । २ ग. °तः—ब्रह्मप्र° । ३ ग. कर्तृत्वादि° । ४ ख. °र्यहेतुनिश्चयलि° । क. °र्यलि° । ५ क. °रत्वासं° । ६ ग. °निर्णये । ७ ख. ग. °रूपत्वमे° । ८ ख. ग. °म् । सृष्टिस्थि° । ९ ग. °न्तादुप° । १० ख. °लिङ्गं ब्र° । ११ग. °त्वात्ता वि° । १२ न कर्तृ° । १३ ग. °त्वं शासना° ।

एकदेशी मन्यते—ब्रह्मपरत्वेऽपि वेदान्ता न ब्रह्मण्येव पर्यवस्यन्ति । किं तर्हि पारोक्ष्येण ब्रह्मतत्त्वं प्रतिपाद्य पश्चादपरोक्षप्रतिपत्तिं विदधति । तथा च सति वेदान्तानां शासनाच्छास्त्रत्वमुपपद्यते । किंच 'श्रोतव्यः' इति श्रवणं शब्दज्ञानात्मकं विधायाथ "मन्तव्यो निदिध्यासितव्यः" इत्यनुभवज्ञानात्मकं मननादिकं स्पष्टमेव विधीयते । तस्मात्—प्रतिपत्तेर्विधावारो वेदान्ताः । इति प्राप्ते,—

ब्रूमः—न प्रतिपत्तेर्विधिः संभवति, कर्तुमकर्तुमन्यथा वा कर्तुमशक्यत्वादपुरुषतन्त्रत्वात् । शास्त्रत्वं तु नानुष्ठेयशासनादेव नियतम्, सिद्धवस्तुशंसनेनापि तदुपपत्तेः । शाब्दज्ञाने जाते पश्चादनुभवात्मकं मननादिकं विधीयते—इति वक्तुं न युक्तम् । 'दशमस्त्वमसि' इतिवच्छब्दस्यैवापरोक्षानुभवजनकत्वेन शाब्दबोधात्पुरैवासंभावनादिनिवृत्तये व्यापाररूपस्य कर्तृतन्त्रस्य मननादेर्विधानात् । तस्मात् "तत्त्वमसि" इत्यादयो वेदान्ता ब्रह्मण्यवसिताः ॥

---

(पञ्चमे ब्रह्मण एव सच्छब्दवाच्यताधिकरणे सूत्राणि ॥)

**ईक्षतेर्नाशब्दम् ॥५॥ गौणश्चेन्नाऽऽत्मशब्दात् ॥ ॥ ६ ॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥ हेयत्वावचनाच्च ॥ ८ ॥ स्वाप्ययात् ॥ ९ ॥ गतिसामान्यात् ॥ १० ॥ श्रुतत्वाच्च ॥ ११ ॥**

पञ्चमाधिकरणमारचयति—

तदैक्षतेतिवाक्येन प्रधानं ब्रह्म वोच्यते ॥
ज्ञानक्रियाशक्तिमत्त्वात्प्रधानं सर्वकारणम् ॥ २३ ॥
ईक्षणाच्चेतनं ब्रह्म क्रियाज्ञाने तु मायया ॥
आत्मशब्दात्मतादात्म्ये प्रधानस्य विरोधिनी ॥ २४ ॥

छान्दोग्ये षष्ठाध्याये—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति प्रस्तुत्य "तदैक्षत—बहु स्यां प्रजायेय—इति तत्तेजोऽसृजत" इति श्रूयते । तत्र सांख्या मन्यन्ते—सच्छब्दवाच्यं सर्वजगत्कारणं प्रधानम् । न तु ब्रह्म, प्रधानस्य सत्त्वगुणयुक्ततया परिणामितया च ज्ञानशक्तिक्रियाशक्तिसंभवात् । निर्गुणस्य कूटस्थस्य ब्रह्मणस्तदसंभवात्—इति ।

---

१ ग. °णं शाब्द° । २ ग. °ज्ञानार्थं म° । ख. °ज्ञानार्थम° । ३ ख. ग. °क्यत्वेनापु° । ४ क. शास्त्रज्ञाने । ५ क. °ति तच्छ° । ६ क. °धिनि ॥ २४ ॥ छा° । ७ ग. °न्ते—तच्छ° ।

अत्रोच्यते—ईक्षितृत्वश्रवणाच्चेतनं ब्रह्म सच्छब्दवाच्यम्। अचेतनस्य प्रधानस्येक्षितृत्वायोगात्। ज्ञानक्रियाशक्ती तु ब्रह्मणि मायया संभविष्यतः। किंच—"अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति नामरूपव्याकर्त्री जगत्कारणदेवता स्ववाचकेनाऽऽत्मशब्देन चेतनं जीवं व्यपदिशति। तथा "तत्त्वमसि" इति चेतनस्य श्वेतकेतोर्जगत्कारणतादात्म्यं गुरुरुपदिशति। तदुभयमप्यचेतनस्य प्रधानस्य जगत्कारणत्वे विरुध्यते। तस्मात्—चेतनं ब्रह्म सच्छब्देनोच्यते॥

---

( षष्ठे ब्रह्मण आनन्दमयताधिकरणे सूत्राणि॥ )

**आनन्दमयोऽभ्यासात्॥ १२॥ विकारशब्दान्नेति चेन्न प्राचुर्यात्॥ १३॥ तद्धेतुव्यपदेशाच्च॥ १४॥ नेतरोऽनुपपत्तेः॥ १५॥ मान्त्रवर्णिकमेव च गीयते॥ १६॥ भेदव्यपदेशाच्च॥ १७॥ कामाच्च नानुमानापेक्षा॥ ॥ १८॥ तस्मिन्नस्य च तद्योगं शास्ति॥ १९॥**

षष्ठाधिकरणमेकदेशिमतेनाऽऽह—

संसारी ब्रह्म वाऽऽनन्दमयः, संसार्ययं भवेत्॥
विकारार्थमयट्शब्दात्प्रियाद्यवयवोक्तितः॥ २५॥
अभ्यासोपक्रमादिभ्यो ब्रह्मानन्दमयो भवेत्॥
प्राचुर्यार्थो मयट्शब्दः प्रियाद्याः स्युरुपाधिगाः॥ २६॥

तैत्तिरीयके देहप्राणमनोबुद्ध्यानन्दरूपा अन्नमय—प्राणमय—मनोमय—विज्ञानमयानन्दमय—संज्ञकाः पञ्च पदार्थाः क्रमेणैकैकस्मादान्तराः पठिताः। तत्र—'सर्वान्तर आनन्दमयः संसारी, परमात्मा वा'—इति संदेहः। 'संसारी' इति प्राप्तम्। कुतः—'आनन्दस्य विकार आनन्दमयः' इति व्युत्पत्तेः संसारिणि संभवात्। अविकृते तु परमात्मन्यसौ न संभवति। किंच "तस्य प्रियमेव शिरः, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा, ब्रह्म पुच्छं प्रतिष्ठा" इत्यानन्दमयस्य पञ्चावयवा उच्यन्ते। अपेक्षितविषयदर्शनजन्यं सुखं प्रियम्। तल्लाभजन्यो मोदः। तद्भोगजन्यः प्रमोदः। सुषुप्त्यादौ भासमानमज्ञानोपहितं सुखसामान्य-

---

१ क. °जीवात्म°। २ ग °ह्म तच्छ°। ३ ख. °धितः॥ २६॥ तै°। ४ ख. ग. °संज्ञिताः। ५ ख. °त्मनि नासौ भ°। ६ ख. °तद°। ७ क. °न्यमात्मा। नि°।

मानन्दः । निरुपाधिकं सुखं ब्रह्म । प्रियादीनां पञ्चावयवानां शिरआदिरूपत्वं प्रतिपत्तिसौकर्याय कल्प्यते । पक्षित्वेन कल्पितस्याऽऽनन्दमयस्य शिरः पक्षौ च, इत्यवयवत्रयम्, आत्मशब्देन मध्यशरीरं चतुर्थावयवत्वेनोच्यते, पुच्छमपरभागः, प्रतिष्ठा पादौ, अयं पञ्चमोऽवयवः । न च निरंशस्य परमात्मनोऽवयवा युक्ताः । तस्मात्—संसार्येवाऽऽनन्दमयः ॥ इत्येवं प्राप्ते,—

ब्रूमः—आनन्दमयः परमात्मा । कुतः—अभ्यासात् "सैषाऽऽनन्दस्य मीमांसा भवति" "एतमानन्दमयमात्मानमुपसंक्रामति" इत्यादिनाऽऽनन्दमयोऽभ्यस्यते । अभ्यासश्च तात्पर्यलिङ्गम्—तात्पर्यं च वेदान्तानां ब्रह्मण्येव—इत्यवोचाम । किंच "सत्यं ज्ञानमनन्तं ब्रह्म" इति ब्रह्मोपक्रमात् "इदं सर्वमसृजत" इति सर्वस्रष्टृत्वादिभ्यश्चाऽऽनन्दमयो ब्रह्म । न च ब्रह्मणि मयट्शब्दानुपपत्तिः, प्राचुर्यार्थत्वसंभवात् । प्रियाद्यवयवा अपि विषयदर्शनाद्युपाधिकृता भविष्यन्ति । तस्मात्—परमात्माऽऽनन्दमयः—इत्येकदेशिनां मतम् ॥

इदानीं स्वमतानुसारेणाधिकरणं रच्यते—

अन्याङ्गं स्वप्रधानं वा ब्रह्म पुच्छमिति श्रुतम् ॥
स्यादानन्दमयस्याङ्गं पुच्छेऽङ्गत्वप्रसिद्धितः ॥ २७ ॥
लाङ्गूलासंभवादत्र पुच्छेनाऽऽधारलक्षणा ॥
आनन्दमयजीवोऽस्मिन्नाश्रितोऽतः प्रधानता ॥ २८ ॥

"ब्रह्म पुच्छं प्रतिष्ठा" इति यच्छ्रुतं ब्रह्म, तत्किमानन्दमयस्याङ्गत्वेन निर्दिश्यते, उत स्वयं प्राधान्येन प्रतिपाद्यते—इति संशयः—आनन्दमयस्यावयवत्वेन—इति तावत्प्राप्तम् । लोके पुच्छशब्दस्यावयववाचित्वेन प्रसिद्धत्वात् ।

उच्यते—न पुच्छशब्दोऽवयववाची । किंतु लाङ्गूलवाची । न चाऽऽनन्दमयस्य लाङ्गूलं संभवति । लाङ्गूलस्य गवादिलक्षणान्नमयावयवत्वादानन्दमयस्यावयवत्वायोगात् । अतः पुच्छशब्देन मुख्यार्थासंभवे सति योग्यतावशादत्राऽऽधारो लक्ष्यते । ब्रह्म,—आनन्दमयस्य जीवस्याऽऽधारः, तत्कल्पनाधिष्ठानत्वात् । न च—आनन्दमयः परमात्मा, प्राचुर्यार्थस्वीकारेऽप्यल्पदुःखसद्भावप्रतीतेः । तस्मात्—जीवाधारो ब्रह्म प्राधान्येन प्रतिपाद्यते । तथाच—

---

१ ख. ग. पञ्चाव° । २ ग. च सर्ववे° । ३ ख. ग. °र्थसं° । ४ क. पुच्छाङ्ग° । ५ ख. °णादन्नमयाद्यव° । क. °णान्नमयावयवत्वमान° । ६ क. ख. °त्वात् । अ° । ७ क. ग. °शब्दस्य मु° । ८ ग. °यजी° । क. °यश्च जी° ।

"असन्नेव स भवति असद्ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः"

इत्यादि ब्रह्माभ्यासः, "ब्रह्मविदाप्नोति परम्" इति ब्रह्मोपक्रमश्चानुकूलो भवति ।

---

( सप्तमे परमेश्वरस्यैव हिरण्मयपदवाच्यताधिकरणे सूत्रे—)

## अन्तस्तद्धर्मोपदेशात् ॥ २० ॥
## भेदव्यपदेशाच्चान्यः ॥ २१ ॥

सप्तमाधिकरणमारचयति—

हिरण्मयो देवतात्मा किं वाऽसौ परमेश्वरः ॥
मर्यादाधाररूपोक्तेर्देवतात्मैव नेश्वरः ॥ २९ ॥
सार्वात्म्यात्सर्वदुरितराहित्याच्चेश्वरो मतः ॥
मर्यादाद्या उपास्त्यर्थमीशेऽपि स्युरुपाधिगाः ॥ ३० ॥

छान्दोग्यस्य प्रथमाध्याये उद्गीथोपासनायामुपसर्जनान्युपास्यान्यभिधाय प्रधानमुपास्यमभिधातुमिदमाम्नायते—"अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इति । तत्र—आदित्यमण्डले विद्याकर्मातिशयवशात्कश्चिज्जीवो देवभावमुपेत्य जगदधिकारं निष्पादयन्नवतिष्ठते, ईश्वरश्च सर्वगतत्वान्मण्डलेऽपि वर्तते । अतस्तयोः संशयः । तत्र 'देवतात्मा' इति तावत्प्राप्तम् । कुतः—मर्यादाधाररूपाणामुच्यमानत्वात् । "ये चामुष्मात्पराञ्चो लोकाः, तेषां चेष्टे देवकामानां च" इत्यैश्वर्यमर्यादोक्तिः, "अन्तरादित्ये" इत्याधारोक्तिः, 'हिरण्मयः' इति रूपोक्तिः । न हि सर्वेश्वरस्य सर्वाधारस्य नीरूपस्य परमेश्वरस्यैश्वर्यमर्यादाधाररूपाणि संभवन्ति । तस्मात्—देवतात्मा । इति प्राप्ते,—

उच्यते—हिरण्मय ईश्वरो भवेत् । कुतः—सर्वात्मत्वश्रवणात् । "सैवर्क्, तत्साम, तदुक्थम्, तद्यजुः, तद्ब्रह्म" इति वाक्ये तच्छब्दैः प्रकृतं हिरण्मयं पुरुषं परामृश्य तस्य ऋक्सामाद्यशेषजगदात्मकत्वमुपादिश्यते । तच्चाद्वितीये परमेश्वरे मुख्यमुपपद्यते । न तु सद्वितीयायां देवतायाम् । तथा—"स एष सर्वेभ्यः पाप्मभ्य उदितः" इति श्रूयमाणं सर्वपापराहित्यं ब्रह्मणोऽसाधारणं लिङ्गम् । यद्यपि देवतायाः कर्मण्यनधिकारात्क्रियमाणकरिष्यमाणपापयोरभावः । तथाऽप्यसुरादिजनितदुःखसद्भा-

---

१ क. °स्त्यर्था ईशे° । २ ग. °न्दोग्ये प्र° । ३ क. °यदेशो° । ४ ख. ग. °वताभा° । ५ ग. °ले च व° । ६ क. °ण्याधि° । ७ ख. °दिनिमित्तज° ।

वात्तद्धेतुभूतं जन्मान्तरसंचितदुरितमनुवर्तत एव। मर्यादाधाररूपाणि तूपाधिधर्मतया सोपाधिके परमात्मन्युपास्ये वर्तितुमर्हन्ति। तस्मात्—ईश्वरो हिरण्मयः॥

---

( अष्टमे ब्रह्मण एवाऽऽकाशशब्दवाच्यताधिकरणे सूत्रम्॥ )

## आकाशस्तल्लिङ्गात्॥ २२॥

अष्टमाधिकरणमारचयति—

**आकाश इति होवाचेत्यत्र खं ब्रह्म वाऽत्र खम्॥**
**शब्दस्य तत्र रूढत्वाद्वाय्वादेः सर्जनादपि॥ ३१॥**
**साकाशजगदुत्पत्तिहेतुत्वाच्छ्रौतरूढितः॥**
**एवकारादिना चात्र ब्रह्मैवाऽऽकाशशब्दितम्॥ ३२॥**

पूर्वोक्ताद्धिरण्मयवाक्यादुत्तरस्मिन्वाक्ये शालावत्येन महर्षिणा सर्वलोकाधारवस्तुनि पृष्टे सति प्रवाहणो राजोत्तरमाह। तत्रत्यं वाक्यमेतत्—"आकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति, आकाशो ह्येवैभ्यो ज्यायान्, आकाशः परायणम्" इति। तत्र—आकाशशब्दार्थो वियत्, ब्रह्म वा—इति संदेहः। रूढत्वात् 'वियत्' इति प्राप्तम्। सर्वभूतोत्पत्तिलयहेतुत्वं च वियत उपपद्यते। "आकाशाद्वायुः, वायोरग्निः—"इत्यादौ वाय्वादीनां सर्वभूतानां वियत्कार्यत्वश्रवणात्॥

अत्रोच्यते—ब्रह्मैवाऽऽकाशशब्दार्थः। "सर्वाणि ह वै"—इत्यत्रासंकुचितसर्वशब्देन वियत्सहितसर्वभूतोत्पत्तिहेतुत्वश्रवणात्। न च वियतो वियद्धेतुत्वं संभवति। रूढिस्तु लौकिकी वियत्येवास्तु। श्रौती तु ब्रह्मण्यपि। "आकाशो वै नामरूपयोर्निर्वहिता" इति प्रयोगदर्शनात्। किंच—"आकाशादेव" इत्येवकारः कारणान्तरं व्युदस्यति। न चैतद्वियत्पक्षे संभवति, घटादिषु वियद्व्यतिरिक्तानां मृदादिकारणानामुपलम्भात्। ब्रह्मपक्षे तु ब्रह्मणः सद्रूपस्य सर्वानन्यतया कारणान्तरव्युदास उपपद्यते। ज्यायस्त्वपरायणत्वे च श्रुत्यन्तरे ब्रह्मणः श्रूयेते—"ज्यायान्पृथिव्याः, ज्यायानन्तरिक्षात्", "विज्ञानमानन्दं ब्रह्म रातेर्दातुः परायणम्" इति। 'कर्मफलं दातुं समर्थम्' इत्यर्थः। तस्मात्—ब्रह्मैवाऽऽकाशशब्देन विवक्षितम्॥

---

१ ख. वोत। २ ख. °व्वादेर्जनना°। ३ क. °पि॥ ३१॥ आकाशजग°। ग. °पि॥ ३१॥ आकाशाज्जग°। ४ ख. ग. °र्वोक्ताहिर°। ५ ख. ग. °धारे व°। ६ ख. ग. °णो नाम रा°। ७ ग. तत्राऽऽद्यवा°। ८ ख. °त एवोप°। ९ क. °रणव्यु°। १० ख. ग. °ह्मणि श्रू°।

( नवमे ब्रह्मण एव प्राणशब्दवाच्यत्वाधिकरणे सूत्रम् ॥ )

## अत एव प्राणः ॥ २३ ॥

नवमाधिकरणमारचयति—

मुखस्थो वायुरीशो वा प्राणः प्रस्तावदेवता ॥
वायुर्भवेत्तत्र सुप्तौ भूतसारेन्द्रियक्षयात् ॥ २३ ॥
संकोचोऽक्षपरत्वे स्यात्सर्वभूतलयश्रुतेः ॥
आकाशशब्दवत्प्राणशब्दस्तेनेशवाचकः ॥ २४ ॥

आकाशवाक्यादुत्तरस्मिन्वाक्ये प्रस्तावनाम्नः सामभागस्य देवतां प्रस्तोत्रा पृष्टायामुषस्तिरुत्तरं ददौ । तत्रत्यं वाक्यमेतत्—"प्राण इति होवाच । सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति, प्राणमभ्युज्जिहते, सैषा देवता प्रस्तावमन्वायत्ता" इति । तत्र—'प्राणशब्दार्थो मुखबिलान्तर्वर्तिवायुः, ब्रह्म वा,'—इति संदेहः । मुखबिलान्तर्वर्ती वायुर्भवेत्, सर्वभूतलयस्य तत्र सुसंपादत्वात् । सुषुप्तिकाले सर्वभूतसाराणामिन्द्रियाणां प्राणवायौ प्रविलयात् । इति प्राप्ते,—

उच्यते—इन्द्रियमात्रलयपरत्वे व्याख्यायमाने "सर्वाणि ह वै"—इत्यसौ सर्वशब्दः संकुचितः स्यात् । आकाशशब्दवत्प्राणशब्दोऽपि श्रौतरूढ्येवकाराभ्यां ब्रह्मवाचकः । अस्ति हि प्राणशब्दस्य ब्रह्मणि श्रौतरूढिः, "प्राणस्य प्राणम्" इत्यत्र ब्रह्मविवक्षया द्वितीयप्राणशब्दप्रयोगात् । तस्मात्—ईश्वरः प्राणः ॥

---

( दशमे ब्रह्मण एव ज्योतिःशब्दाभिधेयत्वाधिकरणे सूत्राणि ॥ )

## ज्योतिश्चरणाभिधानात् ॥ २४ ॥ छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथाहि दर्शनम् ॥ ॥ २५ ॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नविरोधात् ॥ २७ ॥

दशमाधिकरणमारचयति—

कार्यं ज्योतिरुत ब्रह्म ज्योतिर्दीप्यत इत्यदः ॥
ब्रह्मणोऽसंनिधेः कार्यं तेजोलिङ्गबलादपि ॥ २५ ॥

---

१ क. ग. °खस्थ.वा° । २ ख. ग. °चोऽसुप° । ३ ख. °रवा° । ४ ग. तत्राऽऽद्यवा° । ५ क. °शब्दोक्तो मु° । ६ क. ग. °ले भू° । ७ ख. ग. ब्रूमः । ८ ख. ग. °त्र विल° । ९ ख. °त्यत्र स° । ग. °त्यत्रासौ । १० ख. °त्यतः । ब्र° । ११ क. कार्यमृते लि° ।

चतुष्पात्प्रकृतं ब्रह्म यच्छब्देनानुवर्त्यते ॥
ज्योतिः स्याद्भासकं ब्रह्म लिङ्गं तूपाधियोगतः ॥ ३६ ॥

छान्दोग्यस्य तृतीयेऽध्याये गायत्रीविद्यायां हृदयच्छिद्रोपासनमभिध्यायेदमाम्नायते—"अथ यदतः परो दिवो ज्योतिर्दीप्यते" इति । तत्र—'द्युलोकात्परं दीप्यमानं वस्तु किं कार्यरूपं नेत्रानुग्राहकं तेजः, उत ब्रह्म' इति संशयः । 'कार्यम्' इति तावत्प्राप्तम् । " ब्रह्मणोऽसंनिहितत्वेन वाक्यस्य ब्रह्मपरत्वायोगात् । तेजःपरत्वं तूपपद्यते, तल्लिङ्गसद्भावात् । " इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः" इति श्रूयमाणो जाठराग्न्यभेदस्तेजोलिङ्गम् । अत्रोच्यते—असिद्धोऽसंनिधिः, पूर्वस्मिन्गायत्रीखण्डे—

"पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" ।

इति चतुष्पदो ब्रह्मणः प्रकृतत्वात् । तस्य चात्र प्रकृतवाचिना यच्छब्देनानुवर्तनात् । 'अस्य ब्रह्मणः सर्वाणि भूतान्येकांशः, पादत्रयोपलक्षितमनन्तस्वरूपं द्योतनात्मके दिवि स्वस्मिन्नेवावतिष्ठते' इत्यर्थः । न च ज्योतिःशब्दस्य ब्रह्मणि वृत्त्यनुपपत्तिः, भासकत्ववाचित्वात् । ब्रह्मणो जगद्भासकत्वात् । तेजोलिङ्गं त्वौपाधिके ब्रह्मण्यवकल्प्यते । तस्मात्—ज्योतिर्ब्रह्म ॥

---

( एकादशे ब्रह्मण एव प्राणशब्दव्युत्पाद्यत्वाधिकरणे सूत्राणि ॥ )

**प्राणस्तथाऽनुगमात् ॥२८॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ ॥ २९ ॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ॥ ३० ॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥**

एकादशाधिकरणमारचयति—

प्राणोऽस्मीत्यत्र वाय्विन्द्रजीवब्रह्मसु संशयः ॥
चतुर्णां लिङ्गसद्भावात्पूर्वपक्षस्त्वनिर्णयः ॥ ३७ ॥
ब्रह्मणोऽनेकलिङ्गानि तानि सिद्धान्यनन्यथा ॥
अन्येषामन्यथासिद्धेर्व्युत्पाद्यं ब्रह्म नेतरत् ॥ ३८ ॥

---

१ ख. ग. °वर्तते । २ ख. °स्य द्वितीयाध्या° । ३ क. ग. संशये । ४ क. °नन्तं स्व° । ५ ख. °तमाना° । ६ क. ख. °स्मिन्नव° । ७ ग. °वाचकत्वा° । ८ क. ख. °द्धे व्युत्पा° ।

कौषीतकीनामुपनिषदीन्द्रप्रतर्दनाख्यायिकायां प्रतर्दनं प्रतीन्द्रो वक्ति—"प्राणोऽस्मि प्रज्ञात्मा तं माम्—आयुरमृतम्—इत्युपास्स्व" इति । तत्र चतुर्विधलिङ्गवशाच्चतुर्धा संशयः । "इदं शरीरं परिगृह्योत्थापयति" इति प्राणवायोर्लिङ्गम् । 'अस्मि' इति वक्तुरिन्द्रस्याहंकारवाद इन्द्रलिङ्गम् । "वक्तारं विद्यात्" इति वक्तृत्वं जीवलिङ्गम् । "आनन्दोऽजरोऽमृतः" इति ब्रह्मलिङ्गम् । तत्र—प्राबल्यदौर्बल्यविवेकाभावादनिर्णयः—इति पूर्वपक्षः ।

सिद्धान्तस्तु—सन्त्यत्र ब्रह्मणोऽनेकलिङ्गानि । तद्यथा—"त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति हिततमत्वमेकं लिङ्गम् । "यो मां विजानीयात्, नास्य केनचन कर्मणा लोको मीयते, न मातृवधेन, न पितृवधेन" इति ज्ञानमात्रेण महापातकाद्यलेपोऽपरं लिङ्गम् । एवमन्यान्यपि लिङ्गान्युदाहर्तव्यानि । न चैतानि प्राणेन्द्रजीवपक्षेषु कथंचिदप्युपपादयितुं शक्यन्ते । प्राणादिलिङ्गानि तु ब्रह्मण्युपपद्यन्ते, प्राणादीनां ब्रह्मबोधद्वारत्वात् । तथा सति ब्रह्मलिङ्गानामनेकत्वादनन्यथासिद्धत्वाच्च प्राबल्यम् । तस्मात्—'ब्रह्मैवात्र व्युत्पाद्यम्, न प्राणादि' इति सिद्धम् ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थमुनिप्रणीतायां वैयासिकन्यायमालायां प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥**

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ११ | ११ |
| सूत्राणि | ३१ | ३१ |

---

( अथ प्रथमाध्यायस्य द्वितीयः पादः )

( प्रथमे ब्रह्मण एव मनोमयत्वाद्यधिकरणे सूत्राणि ॥ )

**सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥ विवक्षितगुणोपपत्तेश्च ॥ २ ॥ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥ कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥ शब्दविशेषात् ॥ ॥ ५ ॥ स्मृतेश्च ॥ ६ ॥ अर्भकौकस्त्वात्तद्व्यप-**

---

१ ख. ग. 'तक्याम्' । २ ख. 'तुर्धा' । ३ ख. ग. 'न्द्रस्य लि' । ४ ख. 'रोऽमरोऽमृ' । ५ ख. ग. कदाचि' । ६ ख. ग. 'ह्मैव व्यु' । ७ क. ग. इति प्रथमाध्यायस्य प्रथमः पादः । ख. इति श्रीशारीरकाधिकरणमालायां प्रथमाध्यायस्य प्रथमपादः ।

## देशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ॥ ७ ॥ संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

द्वितीयपादस्य प्रथमाधिकरणमारचयति—

मनोमयोऽयं शारीर ईशो वा प्राणमानसे ॥
हृदयस्थित्यणीयस्त्वे जीवे स्युस्तेन जीवगाः ॥ १ ॥
शमवाक्यगतं ब्रह्म तद्धितादिरपेक्षते ॥
प्राणादियोगश्चिन्तार्थश्चिन्त्यं ब्रह्म प्रसिद्धितः ॥ २ ॥

छान्दोग्यस्य तृतीयेऽध्याये शाण्डिल्यविद्यायामिदमाम्नायते—"मनोमयः प्राणशरीरो भारूपः" इति। तत्र—'जीवः, ईशो वा' इति संदेहः। 'जीवः' इति तावत्प्राप्तम्। मनःसंबन्धादीनां जीवे सुसंपादत्वात्। 'मनसो विकारो मनोमयः' इति मनःसंबन्धः। 'प्राणः शरीरमस्य' इति प्राणसंबन्धः। नचेदं द्वयमीश्वरे सुसंपादम्। "अप्राणो ह्यमनाः शुभ्रः" इति निषेधात्। तथा—"एष मे आत्माऽन्तर्हृदयेऽणीयान्" इति श्रूयमाणं हृदयेऽवस्थानम्, अणीयस्त्वं च निराधारस्य सर्वगतस्य न कथंचिदुपपद्यते। तस्मात्—जीवः। इति प्राप्ते,—

ब्रूमः—"सर्वं खल्विदं ब्रह्म तज्जलान्—इति शान्त उपासीत" इत्येतस्मिञ्शमविधिपरे पूर्ववाक्ये श्रूयमाणं यद्ब्रह्म, तदेव 'मनोमयः, प्राणशरीरः' इत्येताभ्यां तद्धितबहुव्रीहिभ्यां विशेष्यत्वेनापेक्ष्यते। शमवाक्यस्यायमर्थः—'यस्मात्सर्वमिदं ब्रह्म तज्जत्वात्, तल्लत्वात्, तदंत्वाच्च, तस्मात्सर्वात्मके ब्रह्मणि रागद्वेषविषयासंभवादुपास्तिकाले शान्तो भवेत्' इति। एतद्वाक्यगते ब्रह्मणि विशेष्यत्वेनान्विते मनोमयवाक्यमपि ब्रह्मपरं भविष्यति। न च—ब्रह्मणो मनःप्राणसंबन्धाद्यनुपपत्तिः, निरुपाधिके तदनुपपत्तावपि सोपाधिकस्योपास्यस्य चिन्तनार्थतया तदुपपत्तेः। तस्मात्—सर्वेष्वपि वेदान्तवाक्येषु यद्ब्रह्मोपास्यत्वेन प्रसिद्धम्, तदेवात्राप्युपास्यम्। न हि क्वचिदपि वेदान्ते जीवस्योपास्यत्वं प्रसिद्धम्। ततो 'ब्रह्मैव' इति सिद्धान्तः॥

---

( द्वितीये, ईश्वरस्यैवात्तृत्वाधिकरणे सूत्रे— )

## अत्ताचराचरग्रहणात् ॥ ९ ॥ प्रकरणाच्च ॥ १० ॥

द्वितीयाधिकरणमारचयति—

---

१ ख. ग. °तीयाध्या°। २ क. ख. °ति प्राप्त°। ३ ख. त। ४ क. तदनत्वात, त°। ख. °तदन्त्वात्। ग. तदनन्यत्वात्। ५ क. तज्जलान्। तस्मा°। ६ ग. °स्याचिन्तार्थ°। ७ ख. ग. °दान्तेषु। ८ ख. राद्धान्तः।

जीवोऽग्निरीशो वाऽत्ता स्यादोदने जीव इष्यताम् ॥
स्वाद्वत्तीति श्रुतेर्वह्निर्वाऽग्निरन्नाद इत्यतः॥ ३ ॥
ब्रह्मक्षत्रादिजगतो भोज्यत्वात्स्यादिहेश्वरः ॥
ईशप्रश्नोत्तरत्वाच्च संहारस्तस्य चात्तृता ॥ ४ ॥

**कठवल्लीषु** द्वितीयवल्ल्यवसाने पठ्यते—

"यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इति ।

अयमर्थः—'ब्राह्मणक्षत्रियजाती यस्यौदनस्थानीये, मृत्युश्चोपसेचनस्थानीयः, स पुरुषो यत्र वर्तते तत्स्थानम् 'इदमित्थम्' इति को वेद । न कोपि जानाति, इत्यर्थः । अत्र—ओदनोपसेचनशब्दाभ्यां कश्चिद्भक्षकः प्रतीयते । स जीवः, अग्निः, ईशो वा इति त्रेधा संदिह्यते । 'जीवः' इति तावत्प्राप्तम् । कुतः—"तयोरन्यः पिप्पलं स्वाद्वत्ति" इति जीवस्यात्तृत्वश्रवणात् । अथवा वह्निर्भवेत्, "अग्निरन्नादः" इत्यत्तृत्वावगमात् । इति प्राप्ते,—

**उच्यते**—ब्रह्मक्षत्रयोरुपलक्षणत्वेन कृत्स्नं जगदिह भोज्यत्वेनावगम्यते । नहि तादृशस्य भोज्यस्येश्वरादन्योऽत्ता संभवति । किंच—

"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद" ।

इति धर्माधर्मकार्यकारणकालत्रयातीते परमेश्वरे नचिकेतसा पृष्टे सति "यस्य ब्रह्म च"—इति वाक्येन यम उत्तरं ददौ । तस्माद्—ईश्वरोऽत्र प्रतिपाद्यः—"अनश्नन्नन्योऽभिचाकशीति" इतीश्वरे भोक्तृत्वं निषिध्यते—इति चेत् । तर्ह्यत्रात्तृत्वं नाम संहर्तृत्वं भविष्यति । तच्चेश्वरस्य सर्वेषु वेदान्तेषु प्रसिद्धम् ॥

( तृतीये जीवब्रह्मणोरेव गुहाप्रवेशाधिकरणे सूत्रे— )

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥ विशेषणाच्च ॥ १२ ॥

तृतीयाधिकरणमारचयति—

गुहां प्रविष्टौ धीजीवौ जीवेशौ वा हृदि स्थितेः ॥
छायातपाभ्यां दृष्टान्ताद्धीजीवौ स्तो विलक्षणौ ॥ ५ ॥

---

१ ग. इत्यदः । २ क. ओदनम् । ३ क. °तीयं य° । ४ ग. °दनीयस्थाने मृ° । क. °दनस्थानीयं मृ° । ५ ग. °त्ते क्व° । ६ क. °रे नाचिके° । ७ ख. ग. °श्वरस भो° । ८ ख. ग. °र्ह्यत्तृ° । ९ ख. ग. स्थितौ । १० ख. ग. °पाद्यद° ।

